श्रीः

# श्रीमहीशूरजनपदसम्पदभिवर्णनम्



महाविद्वान्, करूरु शेषाचार्य.

श्रीः

# श्रीमहीशूरजनपदसम्पदभिवर्णनाभिधोऽयं चम्पूप्रबन्धः



श्रीमहीशूरमहाराजसंस्कृतसरस्वतीप्रासादमहापाठशालायां
ज्योतिश्शास्त्रप्रधानोपाध्यायेन
संस्थानमहाविदुषा
**करूरुशेषाचार्येण**
प्रणीतः

श्री वे. बि. सुब्बय्यमहोदयस्य कल्याणपुरीय
वैद्युतमुद्रणालये सम्मुद्रितो
विजयतां तराम्



मूल्यमष्टौ कलाः



महिशूरपुरगकरिरिपुपीठालङ्कारहीरमणिरेषः ।
श्रीकृष्णसार्वभौमाभिरायुरिन्धां धरातलेऽतियशाः ॥

श्रीः



जननयनासेचनकानघरूपा सा धराङ्गनातिलकः ।
कर्णाटजनपदश्रीस्समेधतामनुकलं हरेः कृपया ॥



यस्माहितीं घनघृणोऽनुपमां वितीर्य
बाल्ये च मूढमपि मां सुकविं वितेने ।
सोऽयं विराजतु गुरुः कविसार्वभौमः
श्रीब्रह्मतन्त्रपरकालयतीन्द्रकृष्णः ॥

श्रीः

## उपहारपत्रम्



ग्रन्थमिममवलोक्य प्रहृष्टमनस्सैतन्मुद्रणाय वित्तसाह्यमाकलयते स्वस्य गैर्वाणवाण्यां प्रणयप्रकर्षं प्रकटयते वदान्याय श्रीकृष्णसार्वभौमायायं प्रबन्धस्सधन्यवादं सकार्तज्ञ्यं सकौतुकं सप्रश्रयं चोपायनीकृतः ॥



एष कविज्योतिर्वित्पण्डितरत्नस्य करुणया सूरेः ।
गोपालस्य ज्योतिस्तत्त्वमुपेतः करूरु शेषार्यः ॥

# उपोद्घातः

श्रीमहीशूरजनपदसम्पदभिवर्णनाभिधोऽयं लघुतमश्चम्पूप्रबन्धः कर्णाटदेशावतंसमहीशूरराजधानीराराजन्नानामणिखचितलोचनासेचनकसिंहासनाधीश्वरस्य शरनववसुशशि (१८९५) समे क्रिस्ताब्दे पट्टाभिषिक्तस्य द्विखनन्दभू (१९०२) मिते क्रिस्तशके भारतेशादेशेन राज्यमुपेयुपस्तुर्यस्य श्रीकृष्णराजसार्वभौमस्य पट्टाभिषेकहायनादितस्समासतस्सैकचत्वारिंशद्वत्सरेषूपनतदेशाभ्युदयबहुविधप्रजानुकूल्यादिवदावदः ।

ग्रन्थेऽत्र सप्तत्रिंशदुत्तरशतं विषयास्संगृहीताः । तत्र विशेषतः कृतानि कृष्णराजसागर — महीशूरपुर — राजगृह — भूप — विजयदशमी शुभयात्रा, शमीमण्टपवर्णनानि सहृदयानां हृदयाह्लादकानि विद्योतन्ते ।

विषयेऽत्र केषांचिद्विद्वद्वराणां प्रशस्तिपत्राणि निवेशितानि । विषयव्यावर्णनावसरे यथार्हं तत्पौर्वापर्यक्रम एव स्वीकृतः । ननु तदुदयकालक्रमः ।

अत्र प्रायस्स्वभावोक्तयस्तत्रतत्रोत्प्रेक्षातिशयोक्त्युपमार्थान्तरन्यासादयो दृश्यन्ते पदानां मैत्र्या लालित्येन च सकृच्छ्रवणमात्रादेवायं प्रबन्धस्सर्वेषां भावाविष्कारको व्युत्पित्सूनां चरित्रजिज्ञासूनां चोपयुक्त इति च दृढं विश्वसिमि.

इत्थमावेदयिता

कुरुरु शेषाचार्यः

संस्थानमहाविद्वान्

It has given me immense pleasure to go through Mahavidwan Sreeman Karur Seshacharya's poetical work entitled "Mahisura Janapada Sampadabhivarnanam" in which this eminent Sanskrit Scholar given a most delightful description of Mysore, which has attained a place of great distinction among the most enlightened and progressive of Indian States. How far she has advanced is best indicated in the most realistic colours by this poetic genius. His charming diction and style give him a foremost rank among Sanskrit poets of our day. The work is highly deserving of every encouragement at the hands of all those that love Sanskrit.

V. SUBRAHMANYA IYER,
Retired Registrar.
Mysore University.

Mysore,
10th December 1937.

Sreeman Karur Seshachar is the Chief Professor of Hindu Astronomy in the Maharaja's Sanskrit College, Mysore, possessing a close and intimate knowledge of the Sahitya Sastra. Besides his proficiency in Astronomy, he has acquired a power to wield the Sanskrit language, so as to suit it to any general purpose of his own. This is seen in his present work "Sri Mahisura Janapada Sampadabhivarnanam" a Champu which aims at presenting a picture of the flourishing condition of the Mysore State. I have gone through nearly the whole of this book. Numerous instances are quoted, in elegant stanzas and prose pieces throughout the book, of the great improvements effected in the social, religious, economic and educational institutions of the State under the loving paternal care of our beloved sovereign, His Highness Sri Nalvadi Krishnarajendra Wodeyar Bahadur, G. C. S. I., G. B. E. The descriptions are realistic and vivid and the style of both the stanzas and prose pieces is always smooth and flowing. The author deserves compliments from the reading public for writing such an interesting and informing little book.

R. RANGACHAR,
**Retired Superintendent,**
**Maharaja's Sanskrit College, Mysore.**

Mysore,
9th Nov. 1937

I went through Pandit K. Seshacharya's "Mahisura Janapada Sampadabhivarnanam" with great pleasure. It is a fine piece of Champu work in Sanskrit, charming in its style and pleasing in its descriptive touches. Its sweet verses and elegant prose pieces are devoted to the description of the various scenes of Mysore, its religious, social, educational, and economical institutions, and the prosperous career of its people under the benign rule of His Highness Sri Nalvadi Krishnaraja Wodeyar Bahadur, G.C.S.I., G.B.E. Pandit Seshacharya is not merely a Jyotirvidvan, but a born Sanskrit poet deserving of commendation.

Mahamahopadhyaya Artha Sastra Visharada

Mysore, DR. R. SHAMASASTRY,

3rd Nov. 1937 B A, Ph.D., M R A.S.

I listened with great pleasure to the recital by the author himself of the poem "Sri Mahisura Janapada Sampadabhivarnanam" composed by the talented poet Sriman Mahavidwan Karur Sesha Charya, Professor of Astrology in the Maharaja's Sanskrit College, Mysore. I have well-known the capacities and capabilities of the learned Pandit in poetic composition, having gone through most of his works in the field on so many previous occasions. The present composition only confirms my view that the Pandit possesses abundantly a real gift for composing slokas in Sanskrit and for writing prose. His style is simple, pure and attractive. The composition is free from errors of grammar, idiom and prosody. The figures of speech employed by the poet add beauty and grace to his work of Art. The poem gives a clear account of the great benefits we have derived from the benevolent rule of His Highness the Maharaja of Mysore who is himself a patron of Art and Literature, and as such it must be a welcome addition to the valuable libraries of individual lovers of books in Sanskrit and of institutions where granthas in the sacred language find a place.

C. RAMANUJA IYENGAR,
District Educational Officer,
Hassan District.

Hassan,
17th November 1937

# अथ पण्डितप्रकाण्डानां प्रशस्तिपत्राणि



श्रीलक्ष्मीहयवदन लक्ष्मीनारायणाभ्यां नमः

श्रीमत्परमहंसपरिव्राजकाचार्यादिविरुदपरिमण्डितैः श्रीलक्ष्मीहयग्रीवदिव्यपादुका सेवक श्रीमदभिनव रङ्गनाथ ब्रह्मतन्त्र परकाल महादेशिकैरनुगृहीतमिदं प्रशस्तिपत्रम् ।

महीशूर महाराज संस्कृतमहापाठशाला ज्यौतिषप्रधानाध्यापकतदास्थानमहाविद्वत्करूरुपुराभिजनशेषाचार्येण विनिर्मितः "श्रीमहीशूरजनपदसम्पदभिवर्णना" ह्ययोऽयं चम्पूप्रबन्धः समग्रं कटाक्षितोऽस्माभिः ।

अत्र कृतानि कृष्णराजसागर, राजगृह, राजविजययात्रादीनां स्वभाववर्णनानि प्रत्यक्षमिव तदुपदर्शकानि विराजन्ते । पदानां मैत्री लालिती गम्भीरिमा च धिनोति सचेतसां चेतांसि । ज्यौतिषिकस्याप्यस्य साहित्यां कवितायां चेदृशः प्रौढिमेति नूनं चित्रीयामहे । अनेन च ग्रन्थेन स्फुटमवगम्यते सर्वोपि कर्णाटजनपदाभ्युदयोदन्तः ।

वस्तुतोऽस्याः प्रतिदिनं श्रीलक्ष्मीहयवदननिरवग्रहानुग्रहेण जरीजृम्भन्त्या मुहुर्दर्शनीयायाश्चिरस्मरणीयायाश्च सर्वस्या अपि कर्णाटदेशसम्पदः सम्भद्रूपोऽस्मन्महाप्रभुस्तुरीयः श्रीकृष्णराजसार्वभौम इति ध्रुवमभिनन्दामः ।

इति नारायणस्मृतिः

श्रीपरकालमठः
महीशूरपुरम्
ईश्वर कार्तिकशुक्लद्वादशी

अत्रास्ति श्रीमठीयमुद्रा।

महीशूरमहाराजास्थानमहाविद्वन्मणिभिः श्रीमन्महाराजसंस्कृतमहापाठशाला ज्यौतिषप्रधानाध्यापकैर्ब्रह्मश्रीयुतकरूरुपुराभिजनशेषाचार्येर्विरचितः "श्रीमहीशूरजनपदसम्पदभिवर्णन" नामको ग्रन्थ आमूलाग्रमवालोकि मया ।

अयं ग्रन्थो महीशूरजनपदान्तर्गतानेकस्यानविशेषवर्णनस्वारस्येन प्रतिपद्यमतिशयस्वभावोक्त्याद्यलङ्कारैरलङ्कृतः पदलालित्यार्थसौष्ठवादिगुणगणमण्डितश्च पठनमात्रेणैव सर्वेषां पण्डितानां हृदयानन्दसन्दोहमक्लेशेनादधातीत्यहं विश्वसिमि ।

शिवस्वामिभवनम्
महिशूरपुरम्
६—११—१९३७.

संस्थानधर्माधिकारि, विद्याविशारद,
कुणिगलाभिजन,
रामशास्त्रिणः

श्रीमद्भिः कवरशेषाचार्यैरास्थानमहाविद्वद्भिः श्रीमन्महाराजसंस्कृतमहापाठशालायां ज्योतिश्शास्त्रप्रधानोपाध्यायैर्विरचितं 'श्रीमहीशूरजनपदसम्पदभिवर्णन''नामकं चम्पूप्रबन्धमामूलाग्रं तत्र तत्रावलोक्येदं पत्रं विलिख्यते ।

यथा— अयं प्रबन्धोऽतिगम्भीरवाग्धोरणीपरिगुम्भितोऽपि सकलानपि देशीयसम्पद्विषयानतिविशदमतिमधुरमतिसरलं च प्रकाशयतीत्यतिरोहितं विदुषाम् ।

ग्रन्थादौ प्रकाशितस्योपोद्घातस्याम्रेडनेन वाचकमहाशयानामालस्यं नेच्छामः सम्पादयितुम् ।

वस्तुतो व्याकरणे साहित्यशास्त्रे प्रौढकवितायां च प्रवीणाः श्रीमन्तः शेषाचार्या आस्थानस्य पाठशालाया ज्योतिश्शास्त्रस्य च सौभाग्यमूर्तय इति प्रमोदामहे ।

महीशूरपुरम्
३१—१०—१९३७

संस्थानधर्माधिकारि, पण्डितरत्न,
महामहोपाध्याय, लक्ष्मीपुराभिजन,
श्रीनिवासाचार्याः

तत्रभवतः श्रीमतः कर्णाटसिंहासनाधीश्वरस्यानन्यसामान्यमान्यराजन्यबिरुदावलीमंडितस्यास्थानाशेषविदुषां मानसराजहंसस्य समस्तराष्ट्रीयजनतासेचनक कृष्णराजसागर, बृन्दावन, वैद्यमहाशाला, संस्कृतमहापाठशालादिमहाकार्यनिर्वर्तनपटिष्ठबुद्धिवैभवस्य श्रीकृष्णराजसार्वभौमस्य यशोराशिप्रकाशकोऽयं "श्रीमहीशूरजनपदसम्पदभिवर्णन"-नामा चम्पूप्रबन्ध आमूलाग्रमवालोकि ।

न केवलमेषां महाविदुषां शेषाचार्याणां ज्योतिश्शास्त्रनदीष्णता । किन्तु कल्हार, मल्लिका, मालती, परिमलावष्टम्भमुष्टिन्धयवाग्गुम्भप्रियम्भावुकानां कवीनां सरणावप्यसाधारणं नैपुण्यं वरीवर्तीति महदिदं प्रमोदस्थानम् । यतः प्रबन्धॄणामेषां कवितायां सौकुमार्य, गाम्भीर्य, माधुर्य, प्रौढोक्ति, प्रभृतयः काव्यगुणास्तत्तदलङ्काराश्च निरन्तरकाव्यपरीशीलनविशदीकृतहृदयानां सहृदयानां स्वान्तानि समाकर्षन्ति ।

प्रत्यग्रप्रबन्धोऽयं पण्डितवृन्दारकबृन्दस्यामन्दमानन्दमाधत्तामित्याशास्महे ।

महीशूरपुरम्  संस्थानमहाविद्वत्साहित्यरत्न, कदम्बाद्यभिजन,

२५—११—१९३७.  गोपालकृष्णशास्त्रिणः

# CONTENTS

# विषयानुक्रमणिका

पद्यगद्यसंख्या

पद्यगद्यसंख्या





# अशुद्धि संशोधनपत्रम्

| पृष्टे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७ | ९ | मुक्त | मुक्तं |
| ११ | १३ | दंति | दन्ति |
| १२ | ८ | भृश | भृशं |
| २६ | १९ | जाजरा | जागरा |
| २७ | २ | वदावहे | वदावदे |
| ३२ | १२ | चतुप्प | चतुष्प |
| ,, | १९ | विरोध | वरोध |
| ३६ | २ | परीक्ष्या | परीक्षा |
| ४२ | २ | पनयात् | पनयनात् |
| ४३ | ४ | मातुस्तसा | मातु-स्तसा |



श्रीः

श्रीहयवदनपरब्रह्मणे नमः

# श्रीमहीशूरजनपदसम्पदभिवर्णनम्

## अथादौ श्रीहयवदनप्रार्थनम्

चराचरतृणादनोऽणुतरयोगिहृन्मन्दुरा-
गृहश्शशिरुचिः परः परमभक्तिरज्जुग्रहः ।
भवोग्रपथतारको निगमरूपहेषोऽनघ-
स्तनोतु भवुकं भृशं शुभतनुर्हयः प्राक्तनः ॥१॥

## स्वगुरुत्रयानुसन्धानम्

सुधारसमलिम्लुचानघविचित्रमोदावह
प्रबन्धरचनप्रसृत्वरयशस्सिताशामुखः ।
पुराणहयताण्डवौपयिकरङ्गजिह्वाञ्चलः
स कृष्णकलिजिद्यतिप्रवरदेशिको भासताम् ॥२॥

हयाननपदाम्बुजद्वयनिरन्तराकैतवा-
मितार्चनसमुद्भवासमसुखप्रपूर्णान्तरः ।
विरक्तिमुखसद्गुणाम्बुधिरिलातले राजतां
यतीन्द्रकलिमर्दनाभिनवरङ्गनाथो गुरुः ॥३॥

Funding: IKS/Tattva Heritage. Digitization: Sarayu Trust/eGangotri

इन्धे श्रीमहिशूरभूपतिमहागीर्वाणविद्यागृहे
विज्ञानं यदुपज्ञमत्र सततं ज्योतिर्महातन्त्रजम् ।
सोऽयं भातु जरद्वचोज्ज्वलनये पातञ्जले नाटके-
ऽलङ्कारे कवने च निस्तुलमतिर्गोपालसूरिर्गुरुः ॥४॥

## महाराजमङ्गलाशंसनम् ।

श्रीवाहास्यसुधासदृक्षशिशिरत्रैलोक्यतापापह-
स्निग्धस्वादुदिशाविसृत्वरकराङ्कूराश्रियं चामिताम् ।
दीर्घायुर्नयसम्पदं विदधतां श्रीकृष्णभूमीशितुः
सौजन्यादिगुणाम्बुधेर्बुधकविस्तोमामरद्रोः प्रभोः ॥५॥

## देशाभ्युदयवर्णनोपक्रमः

आचन्द्रवेद (४१) वत्सरमेतन्महिशूरजनपदसमृद्धिः ।
सम्भूता विव्रियते मया यथामति विमृश्य संक्षिप्य ॥६॥

## कुल्यातटाकैः फलसमृद्धिः

कुल्यानां नूतनानां बहुतरसरसीनां च खातैश्च तासां
भिन्नानां प्राक्तनीनां द्रढिमविरचनैरापगादेवबध्र्याः
निस्तन्द्रैः कारयित्वा कृपिपटुभिरिलाः कर्षकैः कृष्टपच्या
देशेऽस्मिन् राजकीयैर्नृपतिहितपरैर्वर्ध्यते भूफलर्द्धिः ॥७॥

## श्रीकृष्णराजसागरः

भूम्यायें विपुलेऽपि तृप्तिमभजंच्छ्रीकृष्णराजस्सुधी
र्बध्वा सह्यसुतां दृढं ह्रदयुतं कल्पेऽप्यशोष्यं जलम् ।

सम्मेल्यास्य मुखे स्वनामघटितां कृत्वा विभुस्सागरा-
भिख्यां तत्प्रसृतैर्गभीरसलिलैरुर्वीं तनोत्युर्वराम् ॥८॥

## सेतुबन्धपरिमितौ भारतेशाज्ञा

असत्कृष्णमहीपतेरनुपमं भूम्यायवृद्धिक्रिया-
कौशल्यं प्रसमीक्ष्य हृष्टमनसश्श्रीभारताधीशितुः ।
श्रीकृष्णाम्बुधिसेतुमुन्नतममुं हस्तैस्त्र्यशीत्या व्यधा-
दाज्ञातस्स नृपो व्ययेन महतेत्येष प्रजाभ्युच्चयः ॥९॥

## श्रीकृष्णराजसागरवर्णनम्

हन्त जलाशयोऽयमगाधतमोऽभ्रंलिहाभिः प्रतिक्षणं विजृम्भमाणाभिर्दिगन्तसौवस्तिकानवरतनिनदाभि-र्मिथस्संघर्षणोत्पतितमौक्तिकायमानशीकराभिस्सुर-भिशिशिरमरुदाकम्पिताभिर्वीचिभिर्मिथः कलह-प्रवृद्धव्यायतनिजलाङ्गूलताडनोत्क्षिप्तसलिलैस्तिमि-नक्रादिभिर्यादोभिर्गगनोल्लसत्तारकायमाणैः फेनकणै र्निमज्जदुन्मज्जत्सहकारनारिकेलादिभिर्द्रुमैर्मज्जद्गण्ड शैलैर्यावद्दृष्टिपथमतिनीलेन प्रभूतेन पाथसा च वारां निधिरिव संलक्ष्यते ॥१०॥

## तत्सागरसेतूपान्तिमबृन्दावनकावेरीप्रतिकृतिः

इदंकृष्णक्ष्मेशाम्बुनिधिवरसेतोरथ इदं
मनोज्ञं चोद्यानं लसति बत बृन्दावनमिति ।

तदध्यास्ते रम्या स्वकरकलशामन्दविगल-
द्घनस्वच्छासारा कनकसरितोऽस्याः प्रतिकृतिः ॥११॥

## तदुपवनवर्णनम्

नानावर्णनिमग्नवैद्युतकनद्दीपांशुभिः कुत्रचि
न्नीलैः कुत्र चन स्थले च हरितैरन्यत्र रक्तैर्भृशम् ।
स्थानेऽन्यत्र निशासमैश्च कुहचिच्चित्रांशुभिर्निर्झरै-
र्वेशन्तैः प्रमदावनं च रुचिरं बाभाति मोदावहम् ॥१२॥

अन्तर्लीनतटित्प्रदीपशबलानल्पाग्र्यूपाञ्चालिका-
वक्त्रप्रस्रवदूर्ध्वगाधिकजवस्मेराम्बुधारोत्करम् ।
तादृक्दीपसहस्रदीव्यदभितस्संस्थद्रुमं कामिनी-
स्वैरालापविहारयोग्यलतिकागेहं तदुद्यानकम् ॥१३॥

## प्रजानामग्रहतभूमिदानम्

भूमातृप्रमिताग्र्यकृष्यनुगुणक्षोणीग्रहापेक्षिणा-
मल्पार्घाद्वसुधां वितीर्य निजलोकाभ्युच्चयोत्कण्ठया ।
पारम्पर्यभवानुभूतिमचलां दत्वा प्रजा रक्षति
श्रीकृष्णक्षितिपो व्यलोकि कुहचिन्नैतादृशो हि क्रमः ॥१४॥

## मद्यैरुचितधनागमः

अनीत्यान्यैः कात्स्न्याँदुरुतरसुरायानपह्नुतान्
निरीक्ष्य श्रीकृष्णक्षितिपतिमणिर्न्यायजनितम् ।
यतोऽगृह्णाल्लाभं प्रमुदितमनास्तत्स्ववमतः
सुरायो भूम्यायाल्लघुरभवदेतत् सुविदितम् ॥१५॥

## वन्यमहीरुहैर्वित्तायतिः

वनस्पतिकल्पाकृतिप्रवररोपितैश्शाखिभि-
र्वनानि विविधैर्घनान्यहह कारयित्वा भृशम् ।
तदुत्थधनायतिः पुरि चतुर्गुणा कार्यते
व्यतीतसमयोत्थवायतित एतदव्याहतम् ॥१६॥

## दुकूलधनागमः

सर्वौघतस्संप्रति तन्यमानैः
कौशेयवृद्धिप्रदकार्यजालैः ।
असौ पुरी जर्मनचीनदेश-
श्रियं प्रबुद्धामधरीकरोति ॥१७॥

## वैद्युतदीपायः

लाभज्ञाग्रिमकृष्णभूपमणिना सह्यात्मजानिर्झरा-
धःपातस्यदभूमतश्शिवसमुद्राह्वस्थले साधितैः ।
विद्युद्दीपगणैर्धनायतिरसंख्यातात्र विष्वक् पुरे
चामुण्डागिरिमूर्ध्नि च प्रकल्पितैरन्यस्थलेष्वद्भुतैः ॥१८॥

## कल्याणपुरीयशिविरेण धनागमः

कल्याणपत्तनसमीपनिविष्टसेना
भुक्तावशिष्टधनराजिरनागता प्राक् ।
दिष्ट्याद्य कृष्णधरणीपतये प्रदेये-
त्याहस्म भारतमहानृपतिः प्रमोदात् ॥१९॥

### गजविक्रयतो धनाप्तिः

कारापुरासन्नवने हृतानां
चित्रैरुपायैर्वरकुञ्जराणाम् ।
धनागमो विक्रयतो महीयान्
संदृश्यते हृद्यतमेऽत्र देशे ॥२०॥

### अङ्गादिशोधकवस्तुधनागमः

कल्याणे नगरे महाधनमहायन्त्रौघसाह्योत्थितै-
र्विख्यातिं बहुषु स्थलेष्वधिगतैरङ्गादिसंशोधकैः । (सोप्)
नानावर्णपरीमलैर्जनपदे वस्तूत्करैश्श्लाघितैः
प्रोद्यातात्र धनायतिर्बहुतरा श्रीकृष्णराडाज्ञया ॥२१॥

### भद्रावतीयपत्रनिर्मापकयन्त्रैर्भावी धनागमः

नानावर्णविचित्रचिक्कणघनस्तोत्राईपत्रच्छटा
सृष्टेरौपयिकैः प्रभूतधनजैर्भद्रावतीरोधसि ।
यन्त्रैर्हन्त निधित्सितैः कृतिवरैस्तत्कार्यनिर्वाहकै-
र्नूनं नातिचिराद्धनायतिरसंख्यातात्र देशे भवेत् ॥२२॥

### चन्दनतैलाहरणयन्त्रशाला

बुध्वा जर्मनदेश्यबोधितविधिं मेधाविमौलिः प्रभु-
स्तैलं श्लाघ्यतमं मनोहरतरैर्यन्त्रैर्दृढं पेपितैः ।
अन्येषामनधीनतां प्रगमितैस्संवर्धितैः कानने
स्थूलैश्चन्दनदारुभिः प्रतिदिनं संग्राहत्यादरात् ॥२३॥

## सौवर्णखानियन्त्रशाला

इदंजनपदोल्लसत्प्रथितहृद्यहेमाकर-
प्रजातकनकेष्टकाविभवतोऽभिधाभूद्भुवः ।
ऋतैव वसुधेत्युदीरितचरी कृतीन्द्रैरहो
न विश्वसिति कः पुमान् विषयमेनमुक्त भुवि ॥२४॥

## यन्त्रैर्हेमाकरखनने सौकर्यम्

स्वभागोत्कैर्हूणैर्भृतकजनसाध्येन खननात्
खनेर्हेमादातुं व्ययमधिकमायादुपनतम् ।
निरीक्ष्य श्रीकृष्णः प्रकलिततटिच्छक्त्युपहितैः
प्रशस्यैर्यन्त्रौघैरधिकतममापायमधुना ॥२५॥

## भद्रावतीलोहखनिः

भद्रावत्यभिधधुनीतटीविराज-
ल्लोहीयाद्भुतखनिशोधनाय क्लृप्ता ।
प्राज्यस्वव्ययभवहृद्ययन्त्रशाला-
लाभर्द्धिस्त्वनतिचिराज्जनिष्यतेऽस्मात् ॥२६॥

## कडगुलस्थलीयशुक्लाश्मखनिः

एतत्पुरनिकटोपगकडगुलनामस्थले विराजन्त्याः ।
अश्मखनेः खन्यन्ते स्थूलस्थूलास्सितोपला मसृणाः ॥२७॥

## तटिद्यन्त्रैरुपयोगः

चेलादीनां रुचिरवयनं पेषणं तण्डुलादे-
र्व्रीह्यादीनामवहतिररं नैकधा रुच्यपाकः ।
अश्मोत्क्षेपश्शिखरिदलनं पाथसा वर्त्मसेक-
स्तैलादानं शकटगमनं संस्कृतिर्भूपणानाम् ॥२८॥

यथास्थानस्थित्याकलनबहुखेदापनयनं
सिराणां व्यस्तानां शिशिरमरुदापादनसुखम् ।
अयस्कर्मानेकं वपनमिदमाद्यास्सुमतिभिः
क्रियास्सन्तन्यन्ते तटिदुदितयन्त्रैर्नवनवाः ॥२९॥

## मण्डयस्थलीयशर्करायन्त्राणि

नानाग्रामभवैस्स्थुलै रसयुतैस्स्थूलैर्वरै रैक्षवैः
काण्डैर्मण्डयनामकस्थलगतैर्यन्त्रैर्भृशं मर्दितैः ।
स्वादिष्ठास्सिकतासमास्सुरुचिराः पाश्चात्यकान्तावपु-
श्शुक्लाश्शासनगा नृपस्य सुधियस्सन्तन्वते शर्कराः ॥३०॥

## सामन्तग्रामादिषु धूमशकटसौकर्यम्

ग्रामाद्ग्रामं प्रति गतिरतीव प्रजाखेददाभूत्
पूर्वं धूमप्रवहणगणैस्तत्र तत्र प्रयुक्तैः ।
देशेऽत्राद्य त्वरितगमनादाशु सिद्धिः क्रियाणां
खेदाभावोऽध्वनि लघुतरस्स्यात् प्रजानां व्ययश्च ॥३१॥

## अधूमशकटगम्यस्थलेषु तैलबाष्पशकटानुकूल्यम्

शराब्धि (४५) मितवत्सरप्रभृति धूमयानैर्विना-
क्षतेऽध्वनि नियोजितैर्जवनतैलबाष्पाणसाम् । (मोटार्)
गणैस्सुखगतागतामितसहायभूतैर्ध्रुवं
जनैस्सरणिचारजश्रमकथापि नाकर्णिता ॥३२॥

## प्रजाप्रतिनिधिसभा

प्रजाप्रतिनिधीन् प्रजाभवुकलोलकृष्णप्रभु-
र्नियोज्य बहुषु स्थलेष्वधिकृतीरमीषां पुनः ।
वितीर्य कुतुकाद्दिदं जनपदीयकोशादिम-
प्रविस्तृतविचारणास्वपि महीं प्रशास्त्यादरात् ॥३३॥

## संप्रति तत्सभायाः प्रतिवर्षं द्विर्भवनम् ।

सांवत्सरिकीं पित्रा कलितां समितिं प्रजाप्रतिनिधीनाम्
प्रतिशरदं द्विश्चक्रे कृष्णक्ष्मेशो विभूतये जगतः ॥३४॥

## न्यायविधायकसमितिः

कां चिन्न्यायविमर्शनामकसभां निर्माय तादृक्सभा
लोकानामथ राजकीयविषयक्षोदाधिकारान् दिशन् ।
तद्गोष्ठीं च नयन् प्रजाप्रतिनिधिप्रख्यातसंसज्जनान्
कृष्णेन्द्रस्तनुते कियन्ति जनतासाह्यान्यहो प्रेमतः ॥३५॥

## उपसचिवसाहायकम्

नीतेर्विमर्शाय पुरा नियुक्ताः
सहायभूतास्सचिवा नृपस्य ।

साह्यावहास्सम्प्रति मन्त्रिणस्तु
द्वित्रोपमन्त्रिप्रवरा नयज्ञाः ॥३६॥

## राज्ञः करात्पीकरणम्

लार्ड्हार्डिङ्ग्प्रभुणा गुणेन्दुनवभू (१९१३) तुल्ये शके क्रैस्तवे
दिष्ट्या पत्तनमेतदागतवता श्रीभारताधीशितुः ।
देये वात्सरिके करे नृपतिना कृष्णेन तन्मन्त्रिणा
न्यूनोऽकारि करो महीशसुगुणैः पूर्णेन्दु(१०)लक्षोन्मितः ॥३७॥

## पुररक्षणसमितिकार्याणि

प्रजावनधियोषसि प्रतिदिनं बहिस्सङ्करः
पुरादिषु निरास्यते तदनु तेषु पेयं जलम् ।
अतन्द्रमतिशोध्यते सलिलहीनवासस्थले-
ऽप्युदारतरदीर्घिकाततिरपि द्रुतं तन्यते ॥३८॥

माभूत् खेदजजा व्यथेति नगरीपालैः प्रणाल्यः कृता
रथ्यायां वसुधान्तरे सुपवनस्पर्शेन कर्तुं सुखम् ।
तन्यन्ते विरला निरन्तरगृहा दुष्टं जल मापिब-
त्वित्यालोच्य तिरोहिताः कुसलिला गर्त्तास्तटाकादयः ॥३९॥

## उदग्रप्रदेशेषु जलनलिकानिवेशः

अधित्यकामुखोन्नतस्थलाधिवासिनां नृणा--
मपश्यतां जलं पिपासया श्रमेण ताम्यताम् ।
जलश्रमापनोदनार्थमत्र पत्तने मुदा
नृपेण कारिता महत्तराः पयोनला वराः ॥४०॥

## अवहननादियन्त्राणि

अवहतिपेषणावयनंयन्त्रवरैरमितैः ।
पुरमभितस्स्थितैर्भृतकजीवितसौख्यचयः ॥
तदधिपलाभवृद्धिरधिका क्रयविक्रयत-
स्तदुदितवस्तुनो भवति लाभचयश्च विशाम् ॥४१॥

## पुरीयकोशनिलयाः

विदेशीयैस्स्वार्थप्रवणधिषणैर्वार्धुषिजनै-
रिहायातैरिभ्यैरनयबहुवृद्धिग्रहणतः ।
कृताल्लोकान्निस्स्वान्नृपतिरभिवीक्ष्य स्वनगरे
प्रजानां साह्याय व्यररचदसौ कोशनिलयान् ॥४२॥

## पुरवर्णनम्

एषा किल महीशूरपुरी निगमागमजलधिपारदृश्वभिः क्रतुयजन-याजनधुरीणधिषणैरनवरतसंस्तूयमानरमारमणगुणगणैर्दांतैश्शा-न्तैर्महीसुरैः पतिभक्तितुन्दिलान्तःकरणाभिस्सुचरिताभिः कुल वधूभिस्स्तेनादिकचग्रहसमाकर्षपटिष्ठैर्नगरपालै राजभटैश्श्रेणिशो निबद्धाभिर्वस्तुजातहृद्याभिर्निषद्याभिरनवकराभिस्स्निग्धाभिर्विप - णिभी रजताचलसङ्काशैरुच्चावचैः प्रासादैररिहृदयदलननिपुणै-श्शतघ्नीमन्दिरैर्नृपसचिवमुखोपवेशनौपयिकैतैलबाष्पशकटनिलयै - र्मूर्तैः पराक्रमैरिव सैनिकैर्विशालाभिस्स्वार्भकगणनिविरीसाभिर्गोग-जवाजिशालाभिर्हूणयवनादिवाद्यविदग्रिमशालासमुदयैश्चानन्दम - मन्दं सन्दुहाना समिन्धे ॥४३॥

अपिच

यस्यां पुर्यां समन्ताद्बहुविधविलसद्रम्यभूयिष्ठविद्यु-
द्दीपैर्दृष्ट्वा त्रियामां दिवससमदशामध्वसंदृश्यसूचीम् ।
के न ब्रूयुस्तमीति प्रथितमिह मृषा नाम तस्या विशाल-
श्लक्ष्णानोयानयोग्यामितविमलतमैरध्वभिर्भासुरायाम् ॥४४॥

यत्राभ्रंलिहसौधशृङ्गदलितश्यामाम्बुदप्रस्रवत्-
स्थूलाम्भःकणसंचयाःप्रतिदिनं मुक्ताफलानां समाः ।
विद्युद्दीपककुक्कुटाण्डविलसद्गोलापदेशाम्भृश
भान्त्येवं कविसंहतिर्वितनुते दृष्ट्वा समुत्प्रेक्षणम् ॥४५॥

* यत्रास्ते महदद्भुतं परमपि प्रासार्कभागाक्षके
मेषान्तद्युगुणोत्थवृत्तगरवौ खस्वस्तिकेऽहर्दले ।
मेषस्याष्टमवासरे विनिहितस्यार्कोन्मितस्य प्रभा
शङ्कोर्नो पतति स्वमूर्ध्नि भवनात् तीक्ष्णद्युतेरम्बरे ॥४६॥

---

* अत्रेयं गोलविदां प्रक्रिया । वियति निश्चलमवस्थितस्य भूगोलस्य प्रायस्स-मन्तादूर्ध्वाधरगाण्येव वृत्तानि विद्योतन्ते । तत्र क्षितिजोन्मण्डले परं भुवः परिकरवदासाते । यत्र गगनतलमवनिसंसक्तमिव दृश्यते तत्क्षितिजं । तच्च प्राच्यादिषु चतसृषु दिक्षु स्यात् । उदक्क्षितिजादुत्तरध्रुवो यावद्भिरंशै-रुन्नतो लक्ष्यते तावन्तोऽक्षसंज्ञकाः । तथाच ध्रुवोन्नतिरक्ष इति पर्यवस्यति । समवृत्तयाम्योत्तरवृत्तकोणद्वयवृत्तानां यावूर्ध्वाधरौ संपातौ तौ क्रमेणो-र्ध्वाधस्स्वस्तिकसंज्ञौ भवतः । खस्वस्तिकमेव दृश्यं खार्धमिति कथ्यते ।

क्वचिद्वीणागानं क्व चन मृदुगीतं च वदनैः
क्वचिद्गीतं वाद्यैः क्व चन मुरलीगानमतुलम् ।
क्वचिद्गीतिः कुम्भैः क्व चन पटहाद्यैस्सहकृतं
विचित्रं गानं च प्रतिदिनमहो यत्र नगरे ॥४७॥

यत्रानाकं प्रवृद्धे रजतगिरिनिभे कौमुदीकल्पशम्पा-
दीपांशुस्तोमदीप्रे रुचिरबहुविधोल्लोचचित्रासनौघे ।
सौधे कौशेयमञ्चे मृदुमधुरतरं कुर्वतीर्हेमगात्री-
र्गानं के वा मृगाक्षीस्त्रिदशपुरवधूर्वीक्ष्य न ब्रूयुरुर्व्याम् ॥४८॥

---

पूर्वोक्तवृत्तचतुष्टयमध्ये परिकरवन्निबद्धमेव वृत्तं पूर्वोदितलक्षणलक्षितं क्षितिजम् । उन्मण्डलन्तुक्षितिजादुपर्युदीच्यामक्षलवैस्तुङ्गं तस्मादधस्तदंशैरवाच्यां नतं च भवति । विषुवद्वृत्तं खस्वस्तिकाद्दक्षिणतः पलांशान्तरे नतमधस्स्वस्तिकादुत्तरतस्तल्लवान्तरे चोन्नतं ध्रुवद्वयमध्यवर्ति च स्यात् । क्रान्तिवृत्तन्तु विषुववलयादवागुदक्च जिनांशान्तरे क्रमेण नतमुन्नतं च भवति । विषुवद्वृत्तादुत्तरतो दक्षिणतश्च क्रमोत्क्रमाभ्यां स्वक्रान्तिवृत्तयोर्मध्ये द्वादशाष्टचतुःक्रान्त्यंशमितान्तराणि मेषादीनां तुलादीनां च षण्णां राशीनामहोरात्रवृत्तानि सन्ति । द्युरात्रवृत्तव्यासार्धं द्युगुणो द्युज्येति भण्यते । अर्कपलांशदेशे मेषान्ताहोरात्रवलयं खस्वस्तिके लगति । एतत्सर्वं श्रीमहीशूरमहाराजसंस्कृतकलाशालीयास्मन्निर्मापितश्रीभास्करीयगोलयन्त्रात्स्फुटमिति संक्षेपः । अतो द्वादशाक्षांशेऽत्र महीशूरपुरे मेषमास्यष्टमदिवसे मध्यंदिने जलसमायामवनौ दिगङ्किते वृत्ते केन्द्रे निहितस्य द्वादशाङ्गुलस्य शङ्कोः प्रभा रवेर्मस्तकोर्ध्वगतया दक्षिणोत्तररेखायां न पततीत्यद्भुतमितिभावः

## शमीमण्टपपरिवर्तनम्

नगरादस्माच्छम्यास्सौम्यदिशि व्यरचि मण्टपो हृद्यः ।
परिवर्तितपूर्वस्वस्थानो विद्युत्प्रदीपसंवलितः ॥४९॥

## श्रीकृष्णराजेन्द्रमहाचिकित्सालयः

श्रीकृष्णराजेन्द्रसुधीस्स्वकीय-
जनामयोन्मूलनतर्पभूम्ना ।
चक्रे चिकित्सालयमद्वितीयं
स्वनामधेयोपपदं विशालम् ॥५०॥

## तत्र प्रशस्यचिकित्साकरणम्

नेत्रश्रोत्रमुखेन्द्रियोद्भवगदव्यावर्तनात्यद्भुत-
प्रावीण्याभ्यसनाय हूणभिषजामासाद्य तन्नीवृतः ।
तत्रत्येषु परीक्षणेष्वधिगतोत्कर्षैर्भिषग्भिर्वरै-
स्तन्यन्ते विपुले चिकित्सितगृहेऽत्रत्यैश्चिकित्सा वराः ॥५१॥

## उन्मत्तचिकित्सितसदनम्

वस्त्रच्छेदनपातरोदनमहाहासप्रलापामिता-
क्रन्दस्वापपरिभ्रमप्रहरणोपालम्भनाद्यर्दकान् ।
सोन्मादान् विगतोन्मदान् कलयितुं वैद्यैर्वरैर्भेषजै-
रुग्दृग्रोगचिकित्सितालयमसौ तेने महीपालकः ॥५२॥

## यक्ष्मचिकित्सागृहम्

यक्ष्मा रोगाधीश्वरस्संक्रमोत्थो
माभूदित्थं सूक्ष्मयालोच्य दृष्ट्या ।
अस्याः पुर्याः पश्चिमे दिग्विभागे
दूरे बद्धस्तच्चिकित्सानिवेशः ॥९३॥

## महाराज्याश्चिकित्सासदनम्

व्यस्ताकालिकसूतिखेदविधुतिर्भ्रूणोत्थदुर्मांसज-
क्लेशोन्मूलनमार्तवानियतसंभेदार्तिदूरीकृतिः ।
व्यस्तस्थानजरायुसौस्थ्यकरणं चेत्यादिचित्रक्रिया
नारीणां सततं भवन्ति हि महाराज्याश्चिकित्सालये ॥९४॥

## भारतमहाराज्ञीचिकित्साभवनम्

स्वान्येषु भारतमहीपतिषु प्ररूढात्
प्रेम्णोऽधिकं निहितमात्मनि सार्वभौम्या ।
प्रेम प्रकाशयितुमत्र ततान कृष्णो
विक्टोरियावरचिकित्सितवेश्म भूपः ॥९५॥

## आयुर्वेदवैद्यशाला

पुरातनचिकित्सितक्रममनेककालाच्च्युतं
तदङ्गखलदूषितं मितधनप्रसाध्यं शुभम् ।
व्यधादवितुमादराद्बुधवरैरतन्द्रैर्नवै
र्भृशं नृपतिरायुषो निगमवैद्यशालां वराम् ॥९६॥

## यवनवैद्यशाला

तत्तज्जात्यनुगुणभेषजप्रयोगा-
दारोग्यं सुनिपुणमाकलय्य धीमान् ।
कृष्णेन्द्रोऽवति यवनान्वयोत्थ-
वैद्यैस्तज्ज्ञानामुचितचिकित्सितेन हृष्टः ॥५७॥

## मल्लभिषगालयः

सिरास्थलव्यत्ययशोफभारै
र्द्रुमाद्यधःपातकरादिभङ्गैः ।
शस्त्राहतैश्चार्तिभृतां चिकित्सा
मल्लैर्भिषग्भिस्सततं क्रियन्ते ॥५८॥

## पशुचिकित्सावेश्म

न केवलं नृषु दयामहिम्ना
नानाविधाः कृष्णमहीश्वरेण ।
रम्याश्चिकित्सानिलया नियुक्ता-
स्तथा पशूनामपि तेषु हार्दात् ॥५९॥

## वृषाश्वाभिवर्धनशाला

स्थले कुणिगलाह्वये मदकलान् सवीजान् वृषान्
हयांश्च परिपोषितान्निजकुलाङ्गनासङ्गतान् ।
विधाय जनितान् वृषाश्वशिशुसंचयान् पोषितुं
व्यधायि कृतिमन्दिरं वृषभवाजिविद्याविदाम् ॥६०॥

## पणाश्वचङ्क्रमणशाला

अश्वैर्मण्डलशस्त्वतीतपवनैर्भ्राम्यद्भिरुच्चावचै--
र्ह्यैर्हन्त महाधनैश्च पुरतस्स्पर्धाभरैर्धावताम् ।
प्राप्तानां स्वपणग्रहाय महतोत्साहेन देशान्तरा-
द्राज्ञेयं रचिता हि चङ्क्रमकृते शाला वरा सादिनाम् ॥६१॥

## धर्मशालाः

पान्थाध्वजश्रमनिराकृतिलोलचित्त-
श्रीकृष्णभूपमणिशासनगैर्निबद्धाः ।
तेषां सुखावसतये खलु धर्मशाला-
सत्रादिमा जनपदेऽत्र नवा मनोज्ञाः ॥६२॥

## श्रीचामुण्डादेवालयगोपुरपुत्रिकासंस्करणम् ।

चामुण्डागिरिवरगोपुराग्रजाग्रत्-
प्रभ्रश्यत्प्रतिकृतयस्सुसंस्कृताङ्गचः ।
राजन्ते तटिदुदिताग्र्यदीपमाला-
संश्लिष्टा मुदममितां सदा दुहानाः ॥६३॥

## तद्गिरिशृङ्गे ग्रहयन्त्रशालानिवेशोपक्रमः

शैलेष्वष्टेन्दु (१८५७) संख्ये शकनृपसमये भाववर्षेषमासे
पुर्यामत्रोदिताया गणकपरिषदः प्रार्थनां हन्त कृत्वा ।
स्वान्ते प्राचीनजीर्णग्रहगणितसमीकारलोलेन राज्ञा
प्रक्रान्ता बद्धुमेतद्गिरिशिरसि महायन्त्रशाला खगानाम् ॥६४॥

## तद्गिरौ रथ्याः

देवीं प्रणन्तुमनघां गिरिमेनमुच्च-
मारोढुमक्षमनृणां रचिता विशालाः ।
रथ्या वराश्च शकटागमनोपयुक्ताः
सोपानपङ्क्तिरपि वैद्युतदीपदीप्ता ॥६५॥

## देवीतटाकपरिष्करणम्

शैवालपङ्ककलुषं कृमिजालपूर्णं
देवीतटाकसलिलं नितरामशोधि ।
आरोहणावतरणौपयिकीह बद्धा
सोपानपङ्क्तिरपि वैद्युतदीपयुक्ता ॥६६॥

## ललिताद्रिनामकोपकारिका

अत्रोपकार्यां ललिताद्रिनाम्नीं
निर्माप्य शैले क्षितिपाल एषः ।
तदातदाध्युष्य च तामुपास्ते
देवीं जगन्मातरमेकतानः ॥६७॥

## श्रीकृष्णसदनादीनां परिष्करणम्

एतत्पुरीयत्ररणोपगवायुसूनु-
श्रीवासुदेवहरकोल्वरादिकानाम् ।
संस्कारिता नृपतिना खलु तत्रतत्र
जीर्णा विभान्ति निलयाः परया च भक्त्या ॥६८॥

## श्रीकृष्णदेवगवोत्सवः

इदंपुराधिकोल्लसन्मनोज्ञशौरिमन्दिरा-
द्बहिर्दिनाष्टकं दिनात्पराह्निनाच्च तज्जनैः ।
जगत्पतेर्गवां व्रजैश्चलन् महस्तु वार्षिकः
स्थलान्तरे न लोकितार्श्चर्यं ब्रवीमि तस्य किम् ॥६९॥

## श्रीरङ्गपत्तनीयरङ्गेन्द्रदेवगृहपरिष्कृतिः

श्रीमद्रङ्गपुरीयरङ्गरमणागारे तमस्संवृते
सान्द्रे हन्त परोष्णिकामुखगणैर्जालानि च क्ष्मापतिः ।
विद्युद्दीपचयान् निवेश्य सदनं तत् कारयित्वोज्ज्वलं
सेवां तां विरचय्य रङ्गनृपतेर्दुग्धे प्रजानां मुदम् ॥७०॥

## कावेरीसमुत्प्रेक्षणम्

त्रैलोक्यमोहजनकानघरूपमेतं
रङ्गक्ष्मापतिमुदीक्ष्य भृशं प्रमुग्धा ।
एषा कवेरनृपतेः परिरम्भमाणा
प्रेम्णेव भाति तनया महता भुजाभ्याम् ॥७१॥

## श्रीयदुगिरिनाथदेवसद्मनि दीपप्रज्वलनम्

कर्णाटदेशजपचेलिमभागधेय-
देवाधिराजयदुभूधरशेखरस्य ।
नारायणस्य रमणीयतमे निकेते
विद्युद्विभान्ति रुचिरास्तटिनः प्रदीपाः ॥७२॥

## वेलापुरीयसौम्यकेशवसदनसंस्कृतिः

श्रीविष्णुवर्द्धनमहीपतिमौलिक्लृप्त-
वेलापुराभरण सुन्दर [सौम्यक] केशवस्य ।
विश्वातिशायिवहुलानघपुत्रिकौघं
हृद्यं गृहं लसति संप्रति संस्कृतं सत् ॥७३॥

## कल्लेग्रामलक्ष्मीकान्तसद्मसंस्कृतिसाह्यम् ।

श्रीमद्वेणुपुराभिधानकल्लेग्रामस्य भूषामणे-
र्लक्ष्मीकान्तविभोर्मुनीन्द्रकपिलेनाराधितस्याध्वना ।
भक्त्या सात्वतनामकेन सुचिरं जीर्णस्य साध्रं महत्
संस्कारायं निकेतनस्य रचितं राज्ञा महौदार्यतः ॥७४॥

## यवनादिदेवगृहपरिष्कृतिः

संस्कारितैर्यवनसौगतजैनजीर्ण-
देवालयैरपि मतेष्वखिलेषु तुल्याम् ।
दृष्टिं प्रकाशयति सन्मणिकृष्णभूपः
सन्तस्समानधिषणास्सकलेषु लोके ॥ ॥७५॥

## देवसदनीयसमितिः

देवालयीयविविधोत्सवपूजनादि-
वैकल्यधूननकृते समितिं विधाय ।
तत्सभ्यमुख्यविबुधानथ धर्मदर्शि-
नाम्नो वितन्य च समीकुरुते नृपालः ॥७६॥

श्रीचामुण्डागरलपुरेशदेवालययोरधिककेदारार्पणम् ।

चामुण्डागरलपुरेशभक्तिभूम्ना
तत्सद्मोत्सवगणवर्धनाय पूर्वम् ।
केदार्यात् स्वकुलजराजवर्यदत्तात्
कृष्णेन्द्रोऽदिशदमिताग्र्यवप्रकाणि ॥७७॥

श्रीहयमुखदेवसद्मनः क्षेत्रवितरणम्

त्रैलोक्यनाथतुरगाननपादपद्म-
सेवाधुरीणमनसा तदुपायनानि ।
प्रत्तानि कृष्णविभुना बहुलानि वप्रा-
ण्येवं परेषु बहुदेवगृहेषु भक्त्या ॥ ॥७८॥

श्रीहयास्यनवसद्मनिर्माणम्

कृष्णक्ष्मेशकुलक्रमागतगुरुश्रीब्रह्मतन्त्रादिम-
ज्ञानाम्भोधियतीन्द्रवन्दितपदाम्भोजस्य विश्वेशितुः ।
वागीशस्य हयाननस्य विपुलाभोगं च निर्मापितं
वेश्म श्लक्ष्णतमं नवं किल महाराज्ञ्या महोदारया ॥७९॥

तत्र श्रावणमासि विद्वत्सभा

रम्ये वाहास्यगेहे प्रतिशरदमिह व्याकृतिन्यायतन्त्र-
श्रुत्यन्ताम्नायसूत्रश्रुतिनयनमुखानेकतन्त्रप्रवीणैः ।
तत्तत्तन्त्रप्रशस्ताध्ययनविलसितैश्छात्रवर्गैर्यथार्हं
प्रेम्णा संमानितैश्च प्रथितिमुपगता श्रावणे भाति गोष्ठी ॥८०॥

## तत्र श्रीहयाननरत्नडोला

तत्रेन्धे दितिजकृतागमापहार-
व्यामुह्यत्कमलभवावनादरस्य ।
डोला श्रीहयशिरसः प्रदीप्रनाना-
रत्नांशुप्रकरदिनीकृतत्रियामा ॥८१॥

## तत्र भगवतो रजतमण्टपः

उर्ध्वं मण्डलशो निविष्टकलशैरन्तः फणीन्द्रासन-
श्लक्ष्णाहिद्विषदाञ्जनेयविलसल्लम्बाग्र्यदीपद्वयैः ।
द्वारि द्वास्थयुतारेण च पुरः पीठेन कूर्मद्विप-
श्लक्ष्णेणैप समुज्ज्वलोऽश्वशिरसो रौप्यो नवो मण्टपः ॥८२॥

## तत्रोपवनं पुष्करिणीच

मल्लीमालतिपाटलाकुरवकाम्लष्ठातिमुक्तस्थला-
म्भोजैश्चम्पकपारिजाततुलसीपुन्नागकुन्दैर्वृतम ।
नन्द्यावर्तमुखेश्च निर्मलपयस्सोपानरम्यं सरः
स्नानार्हं च दधद्विराजतितरां वाहाननोद्यानकम् ॥८३॥

## श्रीमद्रङ्गनाथब्रह्मतन्त्रपरकालसंयमिवरप्रतिकृतिस्थापनम्

कृष्णक्ष्मेशमणिस्स्वकीयजनकश्रीचामभूमीश्वरा-
चार्यज्ञोत्तमरङ्गनाथकलिजित्कर्मन्दिमौलेर्वराम् ।
मूर्तिं कान्ततमे हयास्यसदने संस्थाप्य ताতেऽधिकां
भक्तिं स्वां प्रकटीचकार धरणौ सौजन्यदुग्धाम्बुधिः ॥८४॥

## श्रीकृष्णब्रह्मतन्त्रपरकालसंयमीन्द्रमूर्तिप्रतिष्ठा

रसास्वादिन्याद्यप्रगुणरसभावादिभरित-
प्रबन्धप्रख्यातस्तुतिनिलयसार्वज्ञ्यजलधेः ।
न्यधाद्रम्यां मूर्तिं सुकविगुरुकृष्णाभिधयते-
रुदारां श्रीकृष्णक्षितिपतिरमन्दप्रमदतः ॥८५॥

## श्री मज्जगद्गुरुनृसिंहभारतीस्वामिमूर्तिप्रतिष्ठापनम्

श्रीशृङ्गाचलदीव्यदब्जजवधूपीठाभिषिक्तामित-
ज्ञानस्मेरनृसिंहभिक्षुजगदाचार्यस्य मूर्तिर्वरा ।
शुक्लस्निग्धमनोहरोपलभवा कृष्णेन राज्ञा नवे
न्यस्ता शङ्करमन्दिरे प्रमनसा हृद्ये दृढे प्रस्तरैः ॥८६॥

## श्रीचामराजेन्द्रप्रतिकृतिः

श्रीचामभूपतिलके जनके स्वकीये
कार्तज्ञ्यमाकलयितुं निहिता तदीया ।
मध्येचतुष्पथममन्दमुदं दुहाना
रम्या वरा प्रतिकृतिर्नृपशेखरेण ॥८७॥

## पुरारामाः

मल्लीजातिमुखप्रसूनलतिकाजालैः परैस्सुन्दरै-
र्वल्लीनां वलयैरशोकबकुलाद्यैः प्रसूनद्रुमैः ।
छायावृक्षचयैर्दिनान्तपवनासक्तोपवेशोचितै-
रुत्माद्युत्थवरासनैश्च निबिडाऽऽक्रीडावली राजते ॥८८॥

## उपवने वनितानां विनोदः

नानाशकुन्तरुचिरोपवने युवत्यः
कान्तैस्समं विधृतसुन्दरचेलभूषाः ।
शृण्वन्ति तत्र रुचिरासनगाश्च गीतिं
सायं मुदा विविधवाद्यविदां मनोज्ञाम् ॥८९॥

## आरामे कार्यालयीयमनुजानां विश्रान्तिः

कार्यालयानवरतामितधीव्यया दि-
साध्याग्र्यकार्यकरणश्रमभारभाजः ।
आक्रीडशाद्वलतलेषु सुखोपविष्टाः
स्निग्धैर्निशम्य वरगीतिमिह प्रहृष्टाः ॥९०॥

## शब्दग्राहकयन्त्रैर्गानाकर्णनम्

चिन्ताद्याकुललोकसंघहृदय'ह्लादाय विष्वक् पुरे
न्यस्तैर्द्वीपजहृद्यगीतिनिनदाकर्षैस्सुयन्त्रैरिह ।
शृण्वन्तस्सकलाः प्रमोदभरितास्तां गीतिकामन्वहं
जानन्तो दिवसान् बहून् सुखमयान् हन्त क्षिपन्ति क्षणात् ॥९१॥

## मधुवनम्

तक्कोलाङ्कोलनीपामलककुटजकाशोकपुन्नागताल-
प्लक्षश्रीपर्णकुन्दोज्ज्वलरुचकवटारेवताम्रातकाम्रैः ।
चाम्पेयारिष्टसर्जार्जकपनसपरिव्याधतापिञ्छभूर्ज-
श्योनाकोदुम्बरैश्चावनिपमधुवनं राजतेऽतीव हृद्यम् ॥९२॥

## श्रीरङ्गपत्तनीयपुष्पवृक्षवाटिका

श्रीरङ्गे नगरे पुरोत्थयवनक्रोधान्धहूणच्छटा-
संग्रामाद्भुतवृत्तसूचकतरालेख्येन कान्तेन च ।
टिप्पूसुल्तगृहेण चम्पकमुखानेकद्रुमैर्वाटिका
मल्लीमालतिसप्तलामुखलताजालैर्वृता चैधते ॥९३॥

## मृगादिशाला

चिक्रीडैः (भल्लूकैः) शिखिभिश्शुकैर्वनमृगैः कोलैर्लुलायैर्मृगैः
शार्दूलैश्शुनकैर्वृषैश्च सरटैस्सर्पैस्सृगालैर्वृकैः ।
मार्जारैर्जलदन्तिभिर्जलनरैर्ग्राहैर्झषैराखुभिः
सिंहैर्नैकविधैः पिकैरपि परैश्शाला वृता राजते ॥९४॥

## चलनचित्रशाला

स्तेयोल्लङ्घनवेश्मसन्धिकरणारोहावरोहोत्थिति-
श्वासोच्छ्वासनतर्जनप्रहरणाश्वासोपवेशादिकान् ।
नृणां दर्शयता वचश्च वदताऽऽश्चर्यात्रहेनाऽमुना
शाला चित्रगणेन सन्ततचलेनेयं वृता राजते ॥९५॥

## वस्तुप्रदर्शनशाला

कौशेयांशुकराङ्कवाविकचयैश्चित्रैश्चमत्कारकै-
र्यन्त्रैश्चित्रपटैश्च दीपनिचयैर्वाद्यैस्सपाञ्चालिकैः ।
खड्गै राजतदान्तदारवमुखानन्ताग्र्यवस्तूत्करै-
रिन्धे वार्षिकवस्तुदर्शनमहाशाला जनैर्मेदुरा ॥९६॥

Funding: IKS/Tattva Heritage. Digitization: Sarayu Trust/eGangotri

## फलपुष्पप्रदर्शनशाला

जम्बूभिः पनसै रसालकफलै रम्भाफलैर्दाडिमै-
र्द्राक्षाभिर्बदरैर्वरैश्च लिकुचैस्सन्नारिकेलैः फलैः ।
अन्यैर्मालतिजातिमल्लिकुसुमैरन्यैश्च पुष्पैर्वृता
शालेयं सुतरां धिनोति रुचिरा चेतांसि वर्णोद्भवा ॥९७॥

## आकाशविमानगमनम्

इदंपुरवरेतरासुलभसौष्ठवं मञ्जुलै-
र्विदेशजनिरीक्षकाः पवनजित्वरैर्व्योमगैः ।
मुदाऽसकृदुदीक्षितुं पुरमिदं व्रजन्त्यम्बरे-
चरास्तनुभृतोऽभवन्निति पुरा न वाणी मृषा ॥९८॥

## चतुष्पथबृहद्घटिकायन्त्रेण कालज्ञानम्

चतुष्पथसमुज्ज्वलोन्नततटित्प्रदीपाञ्चिता-
भिजातचतुरश्रकाद्भुतविशालभित्तिस्थितात् ।
स्फुटं समयबोधनात् तनुभृतां घटीयन्त्रतः
स्वकार्यकरणेऽन्वहं भवति जाजराऽव्याहता ॥९९॥

## राजगृहवर्णनम्

अस्य खलु महीसुरपुराधिनाथस्यानितरनृपतिसाधारणवेलातिग-
सम्पदाश्लिष्टस्य राकासुधाकरसहोदरयशोधवलितदिशावलयस्य
श्रीकृष्णसार्वभौमस्य प्रासादोयमिदम्पुरकमलकर्णिकायमान -
श्शैलोत्तुङ्गो द्रुतकनकद्रवसंलिप्तैर्विभास्वरैः पञ्चभिः कलशैस्तद-

न्तरगारुणांशुवैद्युतदीपमभितो विलसद्भिर्नृपभवनाधिवासपिशुनै-श्चतुर्भिरशुक्लांशुभिस्तादृशैर्दीपैस्तदीयवेश्मानधिवासवदावहेनैकेन तादृशा लोहितरोचिषा दीपेन विचित्रतमवर्णमनस्संवनन-पटुतमचित्रपटसालभञ्जिकापरिमण्डिताभिर्नानाकक्ष्याभिस्सुवर्ण-तन्तुस्यूताभिरुद्यदादित्यातपनिभाभिः कनकसदृशदण्डावलम्बिता-भिस्तिरस्करणीभिर्नवनीतकोमलैः पीवरैः खचितविहगादिप्रति-कृतिकान्ततमैरशुक्लाश्मस्तम्भैरश्रमापनोदनचणैः परिभ्रमद्भि-र्वैद्युततालवृन्तैः राज्यश्रीमन्दहासायमानसुमतोरणैर्विटङ्कैस्तटि-त्प्रदीपाम्रेडितसर्वाङ्गीणकनकद्रवानुलेपनजप्रभामण्डलदिवसाय-मानेनाम्त्राविलासेन कल्याणमण्टपेन रत्नहंसाधिष्ठितसमौक्तिका-ञ्चलहेमातपत्रराजतसोपाननानामणिलोचनासेचनकेन सिंहा-सनेन भद्रासनादिभिरन्यैर्वरासनैर्भगवद्यदुगिरिनाथसम्पत्कुमारवज्र-मकुटेन सौवर्णशिबिकाभिर्दान्तै राजतैः कवाटैर्हृद्यतमैरशुद्धा-न्तैरितरैरद्भुतवस्तुजालैश्चानन्यलभ्यां परां श्रियमाटीकते ॥१००॥

### राजसद्मनि वैद्युतदीपतालवृन्तयोरुत्प्रेक्षणम्

कर्णाटक्षितिपालमण्डनमणिश्रीकृष्णभूमीश्वर-
प्रासादोल्लणवैद्युताण्डसदृशप्राग्र्यप्रदीपच्छटाम् ।
तत्सौधाग्रविदीर्णवारिदगणप्रभ्रष्टवेलातिग
स्थूलस्वच्छविलग्नमौक्तिकततिं नूनं विजानीमहे ॥१०१॥

हे लोकाः कर्मपाकात् स्वयमिह भुवने चक्रवद्भ्रमीतः
सौख्यं दुःखं च तस्मान्निपुणधृतियुता हर्षशोकौ जहीत ।

इत्येनं न्याय्यमर्थं भ्रमदनवरतं वैद्युतं तालवृन्तं
कृष्णक्ष्मापालसौधे कथयति नितरामेत्रमुत्प्रेक्षणं मे ॥
(मुत्प्रेक्षयामः) ॥१०२॥

## राज्ञो जन्मदिनोत्सवे स्वकुलदेवतागुरुपूजनपुरस्सरमासनाधिरोहणम्

कृष्णक्ष्मेशः प्रभाते निजजनिदिवसे कॢप्ततैलानुलेपा-
प्लावः कुर्वंश्च सान्ध्यादिकमथ विनमन् देवतामीप्सितां स्वाम् ।
कल्याणे मण्टपे स्वान्वयगुरुकलिजित्संयमीन्द्रस्य पूजां
(कलिजिन्नूलरङ्गेन्द्रपूजां)
तन्वन् भक्त्या महार्हासनमधिवसति स्तोतृभिर्गीयमानः ॥१०३॥

## तदुत्सवे विदुषां शुभाशंसनम्

अहो इह पुरे वरे प्रतिसमं धराधीशितु-
र्महाजनिदिनोत्सवे बुधवरा हि सोष्णीषकाः ।
मनोज्ञवसनाञ्चिता धृतफलाश्शुभाशीर्युतैः
शुभाक्षतचयैः किरन्त्यवनिपालकं मूर्धनि ॥१०४॥

## तदुत्सवे भूपवर्णनम्

नानारूपविचित्रवैद्युतमहादीपांशुभिः प्रोज्ज्वल-
न्नानारत्नमहार्घहारकिरणैर्ज्योत्स्नासमुत्तम्भितैः ।
नागस्कन्धविमानरत्नरुचिभिश्चाराज्जनैः कृच्छ्रतो
दृश्यं कृष्णमहीपतिं दिविचरं नूनं वयं मन्महे ॥१०५॥

शीतांशुं क्षयिणं कलङ्कसहितं दोषाकरं लुब्धको-
त्तंसं स्वं दयितं विहाय गगनाल्लोला धरामागता ।
ताराराजिरसौ गले गतरुजं मुक्तं कलङ्काद्दृषा-
वासं दातृमणिं नृपेन्दुमनिशं हारच्छलाच्छ्लिष्यति ॥१०६॥

## नवरजनीमहोत्सवे सिंहासनारोहणम्

कृष्णक्ष्मापालमौलिः प्रतिशरदमिदंपत्तने चैपमासे
रम्ये हर्म्ये विशाले रुचिरबहुविशालेख्यजाले प्रदीप्रे ॥
नानाविद्युत्प्रदीपैस्सुमधुमधुमिते नादिते नैकवाद्यैः
स्वाकल्पस्सिंहपीठं नवरजनिमहे तुङ्गमारोहतीदम् ॥१०७

## सिंहासनहंसवर्णनम्

हृद्ये सिंहासनेऽत्र द्रुतकनकमयच्छत्रभास्वन्मरालः
कर्णाटश्रीप्रबोधोल्बणतमकुतुकेनाब्जजेन प्रणुन्नः ।
नाथेनासाद्य तस्मै पुरमिदमदसीयां श्रियं स्वेन बुद्धां
वक्तुं प्रस्थातुकामो द्रुतमिव विततात्मीयपक्षस्समिन्धे ॥१०८॥

## भूपहर्षः

कृष्णेन्दुः प्रतिदिनमीदृशोत्सवेऽसौ-
यामिन्यां करिरिपुपीठगस्सभूपः ।
स्वैः पोष्यैरधिकृतिगैर्नरस्सुवाद्यैः
सद्गानैर्जयनिनदैश्च हर्षितोऽस्ति ॥१०९॥

## विजययात्रावर्णनम्

अथासौ नृपतिमणिस्तुर्यश्श्रीकृष्णराजविभुरेवं सर्वाभिसार-निरन्तरायनिर्वर्तितसकलजनमनस्संवननपटुतरनवरजनीमहोत्सव-संरम्भो विभूततदुत्सवाङ्गभूतविजययात्रौपयिकविचित्रकमनीय-कौशेयमयसौवर्णतन्तुस्यूततनुत्रवैकक्षकोष्णीषमहार्हनानामणि-खचितकुण्डलकेयूरकटककङ्कणाङ्गुलीयकग्रैवेयकतारकायमाणमहा-घनमौक्तिकहारः शमीविटपलवनार्हं निशिततमनीलधारं रौक्म-पुङ्खं हैमनिषङ्गपिहितं निस्त्रिंशं दधानो नमन्तमिव निषादि-चोदनाकुञ्चितपौरस्त्यचरणयुगलं कनककवचितमञ्चमिव गिरिमा-स्तृतविस्तृतहेमाभचित्रकुथं शक्रवज्रालूनपक्षं जङ्गममिव भूधरं चूलिकालसच्चामरयुगं सारस्वतपूरसंवलितमिव यमुनाह्रदमरुण-तरङ्गैरिकरेखिकाङ्किताङ्गं निष्टप्तकनकपट्टपरिकर्मितशुण्डादण्डं सर्वाङ्गीणकमनीयपद्मकं पृष्ठोभयतःप्रलम्बमानमधुरगभीरघण-घणात्कारघण्टाद्वयमौपवाह्यं मतङ्गजवरं हरितलोहितनीलशुक्लां-शुकशकलजपताकातोरणजालकेन मसृणमृदुलारुणमृदुपल-सितमल्लनियुद्धतलेन युग्मशस्त्रिषु स्थलेष्ववागुदक्प्रत्यगभि-मुखैस्सजीवितैरिव व्याततमुखैर्नीलाश्मजैः केसरिभिर्निरुपमादृष्ट-चरमहोत्सवसौष्ठवविलोकननिरवधिककुतुकविस्मृतात्मात्मीये-नानिमिषतामिवापन्नेनोच्चासनमभुपविष्टेन निरीक्षकवधूजनसमु-दयेन कुक्कुटाण्डप्रतिमवेलातिगवैद्युतदीपकोरकनिचयेन च विरा-जिते योधपदातिमार्दङ्गिकपाणिवादवैणविकवैणिकयवनहूणहिन्दु-वाद्यविदग्रिमजनमेदुरे स्वगृहमहाद्वारप्रकोष्ठके सायं तान्त्रिकावे-

दितशुभंयुसमये, निश्श्रेणिकया समधिरुह्य तत्स्कन्धाधिरूढे कार्तस्वरे वरास्तरणपरिमण्डिते समौक्तिकगुच्छमञ्जुविताने स्वरुचिनिर्जितबालार्कातपे विमाने द्वितीयहृदयाभ्यामिव स्वमभितो विद्योतमानाभ्यां स्वाकल्पानल्पभूषाभ्यां स्वानुजतत्सुताभ्यां श्रीयुवराजजयचामराजाभ्यां सार्धमासीनस्तत्रस्थेन पाश्चात्येन केनचिदनुचरेण चामरेण वीज्यमानो महाराजोऽयं प्रस्थितस्स-मयोऽस्त्येति माविलम्बध्वं त्वरध्वं तूर्णमायातेति सर्वाः प्रजास्ता-रमेकविंशतिवारानामन्त्रयद्भिरिव शतघ्नीनिनादैः प्रत्युद्यातोऽभि-तस्सश्रेणीबन्धं द्रुतं गच्छद्भिस्स्वानुगुणवेषैः पश्चिमैरग्रिमैश्चोद्य-तासिप्रासपट्टसशूलकुन्तशक्तियष्टितोमरमुद्गरमुसण्डिभिण्डिवाल-नलकमुखायुधैर्यथैस्तार्क्ष्याञ्जनेयमकरमीनशरभसाल्वगण्डभेरुण्ड शङ्खचक्रचामरसितातपत्रवृत्तपट्टांशुककनकरजतदण्डिकादिबिरुद-धरैः पदातिभिश्श्रवणमधुरैः पर्यायेण प्रवर्त्यमानैर्विविधवाद्यनिनदै-श्चित्रार्पितानिव श्रोतृजनान् वितन्वद्भी रोदसी रुन्धानैर्हैन्दवहौण-वाद्यविद्ग्रिमैर्निर्मर्यादजनोपमर्दविघटकैर्वेत्रकरैर्नगरपालभटैर्विधुतवै-द्युतदीपतोरणकरदीपकैर्भृतकजनै राजमार्गसमीक्षणाय हयैः पुरत-स्तत इतो धावद्भिरुद्यततरवारिभिस्तुरङ्गिभिः करिकुम्भगामिभि-रुच्चगण्डभेरुण्डजयध्वजदण्डधारिभिर्निषादिभिस्ससचिवप्राड्विवाक-प्रतीहाररक्षकस्थायुकगोपभौरिकनैष्किकान्तर्वंशिकसौविदल्ला-दिभिः पदचरै रौक्मनानामणिमयविचित्रभूषाभिः कार्तस्वरतन्तु-स्यूतपीताम्बरैश्च चक्षूंषि मुष्णन्तीभिर्झणंझणत्क्वणनमनोज्ञनूपु-राभिस्तप्तस्वर्णसवर्णगात्रीभिर्वारसीमन्तिनीभिरुन्मस्तकोत्पतन-

जनापायभीरुसादिसमाकृष्टखलीनैः फेनकणानुद्गिरद्भिस्सघोणा-
घूत्करणैर्हैषमाणैः खरतरखुरपातैर्विदारयद्भिरिव भुवमसकृदुन्नी-
यमानैश्शिरोभिरुल्लिखद्भिरिव दिवं पञ्चभिरास्कन्दितधोरितकरे-
चितवल्गितप्लुतगतिभिर्धावद्भिरश्वैर्निषादिनिशिताङ्कुशक्षतभिया-
समेन पथा सञ्चरमाणैर्वाराशिकल्लोलध्वनिप्रतिमजनकोलाहल-
श्रवणेन बृंहमाणैर्हैमराजतदार्पणविमानवरैरुभयतःप्रलम्बित्ररौप्य-
दुन्दुभिद्वयैर्मतङ्गजैर्विपुलकशेरुकापर्शुकाबन्धुरतया सुखासिकौ
पयिकमृदुलस्थूलास्तरणवद्भिरपि स्वाधिष्ठितनियन्तृनातिसुखा-
वहैश्वरमाङ्गैरुपेतैर्व्याघ्रितशिरोविपतनशङ्कया। कर्णमूलदृढामुक्तका-
चमणिसरैर्दूरतरपदविन्यासैर्वृषातिशायिगतिभिः क्रमेलकैर्मदातिरेक-
साचीकृतहैमरौप्यनलकपिहितविषाणमण्डलैरासाकस्कन्धसाम्य-
मंसे धत्तेऽसौ भूपतिरितीर्ष्ययेव सघुर्घुरघोणारवैर्बलीवर्दैर्द्विचतुष्प-
डष्टवृषाश्वद्विपक्रमेलकैरुह्यमानैर्विचित्रैश्शकटै राजयुवराजसचिव-
राजवंश्याविरोधवधूजनोपवेशौपयिकमहाधनमहाप्रभकान्ततमतै-
लवाष्पशकटैः परिवृतः काममपि सुषमामाबिभ्राणस्तत्रतत्र बृहत्पे-
टास्थलादिरथ्यासु विनिर्मितेषु लम्बमाननारिकेलरम्भाफलक्रमु-
कादिगुच्छसुरभिलकुसुमसरमञ्जुलेषु "श्रीकृष्णराजेन्द्रो विज-
यतां श्रीकृष्णसार्वभौमसुखागमन" मितिच पदाभिव्यञ्जकवर्ण-
मालाङ्कितपुरोबद्धपताकेषु विचित्रनिष्कृत्तनानावर्णपत्रपरिकलित-
प्रतिकृतिषु विपुलाभोगेषु कायमानेषु क्षणंक्षणमवस्थाय कुसु-
माञ्जलीन् विकिरद्भिः पौरवृद्धैस्सभक्तिप्रेमप्रकर्षमुपायनीकृतानि
प्रकृतिसुभगमधुरसुरभिफलपुष्पाणि सबहुमानं प्रतिगृह्णानस्सौधा-

ग्रमधिरूढानामुत्सवविलोकनकौतुकविष्फारितेक्षणानां सुरवधूत्र-पावहरामणीयकानां नवनवविचित्राम्बरभूषणानां मृगेक्षणानां जालमार्गनिस्सरत्कुवलयदलाभापाङ्गधाराभिस्सुत्राममणिमया-यितलक्ष्माभत्तनुत्रो मध्ये मार्गं नगरपभटवेत्रप्रहरणतर्जनादिक-मपि तृणाय मन्वानैरुदधिकल्लोलवदुपर्युपरि समापतद्भिस्ति-लमात्रमप्यवकाशममुञ्चद्भिर्ग्राम्यैर्नागरैर्दिदृक्षुभिरक्षिभिस्सस्पृहं निपीयमानो द्विरदस्कन्धादवतीर्णस्समन्ताद्दीपपञ्चकाञ्चिनवैद्युत-दीपवृक्षैरुपशोभितं तत इतो विसृत्वरैस्स्वकीर्तिपुञ्जैरिव धवल-तमैः पटगृहैर्बहिस्समुल्लसितमेतन्नगरौत्तराहं कान्ततमं शमी-मण्डपमवगाहते प्रतिवत्सरम् ॥११०॥

## "शमीमण्डपकार्याणि, कल्याणमण्डपाधिगमनंच"

ततस्तत्र च नृपोत्तंसो निवेशितस्वानुयायिवर्गः परिमेयपुरस्सर-श्शमीपादपमूलमुपेत्य तं तरुं पुरोधसोपदिष्टेन विधिना सप्रश्रय-मभ्यर्च्य निशितधारेण तरवारिणा तदीयां शाखां विलूय ततः प्रतिनिवृत्तस्सप्रेमभरं निर्वर्तितप्रतीतस्वानुयायिगणसजग्धि-सपीतिकृत्यो मण्डलशो योधानां धावदधोपरिकन्दुकखेलनै-स्तदुपरि हौणवाद्यवादनैः पङ्क्तिशस्तादृशवाद्यवादनस्वरानुगुणं-हयानां भटानां च पदविन्यासैर्वाद्यविदध्यक्षाज्ञानुरूपं सपर्यायं सश्रेणिबन्धमवतिष्ठमानानां योधानामूर्ध्वसमुद्यतनलकविग्रहन-शब्दैरीषदपि परस्पराङ्गाहतिविधुरं प्रवृत्तैः क्रमोत्क्रमगैश्चतुर-तरयोधजनदण्डादण्डिविक्रीडितैश्श्रेणिशो भूतलनिविष्टसन्दीपि-तगन्धकमूपाग्निनानावर्णस्फुलिङ्गैर्बहिवर्तिकाप्रज्वलितमसुरुसुरु-

ध्वानंदूरतरोर्ध्वनिस्सरत्तारतरध्वनिविदलद्दन्धकनलकोत्थविचि-
त्रवर्णस्फुलिङ्गवर्पिभिराकाशबाणैर्गृहमण्डपवेदिकामनुजद्विपाश्व-
वृपाद्याकारैस्सुखागमनार्थत्रोधकहूणलिपिमालाभिव्यञ्जकैस्साग्नि-
वर्तिसन्धुक्षितगन्धकगर्भपत्रसंलग्नवेणुतनुशलाकाशालासन्निवेशै-
र्निशां दिवसयद्भिरिव समुद्यतप्रांशुदण्डाग्रकनद्भाजनस्थैर्मत्ता-
पाह्वयैः प्रज्वलितपिष्टामभापवटककल्पगन्धकपिण्डैरन्यैश्च विवि-
धैश्चित्रकरैर्बाणविशेषैः प्रमुदितान्तरङ्गो निर्गमकालिकनव्यविचि-
त्राकल्पस्तादृशाभ्यां श्रीयुवराजजयचामराजाभ्यां साकं तादृशं
दन्तावलमधिरूढो नभसि गोत्रभिदश्शतमन्योर्वाहनभूतस्य स्वद्र-
यितस्य जलदस्य परम्परासंसर्गदोषेणैवात्मनस्समुपनतं चञ्चले-
त्यपयशः परिमार्ष्टुं तादृशाम्बुदानपेक्षं दिगन्तरविसृत्वरसर्वका-
माभिवर्षकसुरवाङ्मयवारिदपतेर्गोत्राभिवर्धकस्य विमन्योः कृष्ण-
भूमीन्द्रस्य साक्षादाश्रयेणैवाचञ्चलतां लब्धुं परितस्तमाश्रयन्ती-
भिरिव शम्पाभिर्वृतिकल्पाभिर्दीपावलिभिः कथमपि चक्षूंष्युन्मि-
ष्योन्मिष्य द्रष्टुमहमहभिकया समन्तात् समवेताभिर्जनताभिस्स-
कौतुकमभिवीक्ष्यमाणो महोत्सवसौष्ठवमिदमश्रुतदृष्टपूर्वं लोचना-
सेचनकं नयनसाफल्यावहं निस्पन्दमुदीक्षितुमक्षमाभिरात्मनो
विधिसृष्टां सनिमेषतामुपालभमानाभिस्सौधाग्रमारूढाभिर्मृगाक्षी-
भिस्सप्रणयातिशयं पेपीयमानो भूयो राजगृहमहाद्वारालिन्दम-
धिगतो दन्तिस्कन्धगविमानादवतीर्णः परिगणितैरधिकृतैः कुसु-
माञ्जलिभिरवकीर्यमाणः कनकद्रवसंलिप्तस्तम्भैर्वैद्युतदीपगुच्छनि-
भास्वरं विचित्ररत्नकम्बलावृतमसृणसचित्रेष्टकचितं कल्याण-

मण्डपमुपेतस्तल्ललामायमानं हैमतन्तुस्यूतकौशेयास्तरणमण्डितं
राजतातपत्रकान्ततमं मुदा प्रतिसमं भद्रासनमध्यास्ते ॥१११॥

## नव्यं द्वितीयं राजभवनम्

पुर्याः प्राच्यामात्मनाध्युष्यमाणा-
द्धर्म्यादन्यो नूतनो रम्यसौधः ॥
नानाकक्ष्यामण्डितस्तुङ्गशृङ्गः
कृष्णक्ष्मापेणादरात् कल्पितोऽस्ति ॥११२॥

## काशीविश्वविद्यानिलयाय वित्तार्पणम्

काशीराजद्विश्वविद्यालयाय
प्रत्यब्दं श्रीकृष्णभूमीश्वरेण ।
मुद्राः प्रेम्णा द्वादशघ्नं सहस्रं
सन्दीयन्ते तत् प्रधानाधिपेन ॥११३॥

## तादृशदानप्रशंसनम्

ईदृक्षानन्यसाध्याद्भुतवितरणतः कृष्णभूमीन्द्रमौलेः
को वा लोके स्वदेश्यप्रकृतिषु च परं प्रीतिरन्यासु नेति ॥
ब्रूयादेतेन सिद्धं दशरथसुतवत् स्वान्यलोकेषु कामं
प्रीतिस्तुल्येति मेघस्सकलमपि समं वीक्षते वर्षणे हि ॥११४॥

## एतत्पुरीयविश्वविद्यालयः

पुरेऽत्र निरमाय्यसौ रुचिरविश्वविद्यालयः
प्रभूतधनराशिजः कुशलकृष्णभूमीभृता ॥
गृहेऽत्र महतीं प्रथां गतवतां कलामम्भवां
प्रशस्यनिरुदं मुदा प्रतिसमं ध्रुवं दीयते ॥११५॥

## तत्र प्रौढकक्ष्यामाणवकानां परीक्षाफलितांशविलोकनविनोदः

कार्यागारेऽत्र भित्तौ विनिहितफलकं प्रौढकक्ष्यापरीक्ष्या
भव्याभव्यावबोधं द्रुततरगतयस्संघशो वीक्ष्य शिष्याः ।
नोत्तीर्णाः केऽप्यनागस्कृतमपि सततं स्वं परीक्षानियुक्तं
मौर्ख्यान्निन्दन्ति केचिद्विधिविहतकविधिं तादृशास्स्वं ब्रुवन्ति ॥११६॥

केचित्ते स्वं शपन्ति प्रगुणसमुचितप्रश्नयोग्योत्तराङ्गं
धून्वन्तस्स्वं कराग्रं कति चन विपुलस्वव्ययात्ते रुदन्ति ।
उत्तीर्णा दैवयोगात् सुरगुरुसदृशं मन्वते केऽपि शिष्याः
स्वं स्वश्लाघाप्रवीणा लघुतरमृदुलश्मश्रु हस्तैस्स्पृशन्तः ॥११७॥

## प्राच्यकोशागारम्

कीटस्त्रीमुखदंशनश्यदनघप्राच्यप्रबन्धावन-
प्रेम्णा तद्बहुवीक्षणोद्यदमितज्ञानर्द्धिदानेप्सया ।
नूत्नग्रन्थजनव्यनव्यधिपणावैशद्यदानाशया
राज्ञा च प्रविकल्पिता मतिमता सा कोशशाला वरा ॥११८॥

## शासनकार्यालयः

पुराणनवशासनावनकृतादरक्ष्मापति-
प्रक्लृप्तकृतिमन्दिरात् प्रतननव्यकालोन्नतिः ।
महीभृदवनक्रमस्तदुदयात्ययाब्दादिकं
तदातनजनस्थितिस्स्फुटतरं च विज्ञायते ॥११९॥

## वैद्युतमुद्रणयन्त्राणि

मुद्राक्षरग्रथकसाह्यवशेन पूर्वं
प्राच्यप्रबन्धमुखमुद्रणमाशु नासीत् ।
मुद्रालयेऽद्य तटिदुद्भवीर्यतस्स्यु-
र्वेलातिगानि निमिषेण सुमुद्रणानि ॥१२०॥

## उदन्तपत्रवाचनशाला

निजपरदेशजवृत्तव्रातज्ञानाय विनिहिता ह्याः ।
नानावाचकशाला लेखोपस्कारसमुदयैर्भरिताः ॥१२१॥

## राजगृहे विद्वद्वेतनम्

राज्ञा गेहे स्वकीये सुरभणितिमहाप्रेमभाजा बुधानां
मासे मासे यथार्हं निरुपहति मुदा स्पर्शनाद्वेतनस्य ।
संख्या पुर्याममुष्यां विलसति महती पण्डितानां समृद्धि-
र्नैतादृक्षा व्यलोकि क्वचन जनपदे स्पष्टमेतत् समेषाम् ॥१२२॥

## बृहदाङ्गलकलाशाला

नानाविधाङ्गलतनभोगधरादिधूली-
कर्मेतिहासवरभौतिकदोहदादौ ।
दक्षैर्वृता कृतिवरैः खलु तुङ्गसौधा
भत्याङ्गलपाठवसतिर्विपुला मनोज्ञा ॥१२३॥

## तत्र श्रीजयचामराजेन्द्राध्यापनम्

प्रेम्णा श्रीजयचामराजनरपं नैजानुजन्मात्मजं
हृद्येऽस्मिन् बृहदाङ्लपाठनिलये प्रौढे विभागेऽखिलैः ।
साकं माणवकैरुदारधिषणैरध्याप्य कृष्णप्रभु-
र्नृणां स्वान्यकुमारसाम्यधिषणां सन्दर्शयत्यात्मनः ॥१२४॥

## संस्कृतमहापाठशाला

श्रीमद्भास्करगोलयन्त्रविविधप्राचीनकोशानघ-
श्रीदन्तीन्द्रमुखैः प्रसूनलतिकाजालैर्वरैश्चम्पकैः ।
छात्राणां निलयैस्तृणौघहरितालिन्दैश्च कक्ष्यागणै-
रिन्धे निर्जरभारतीनिवसतिः कृष्णेन्द्रभूपादृता ॥१२५॥

## तत्र च्छात्राणामध्यापनम्

तर्कव्याकृतिकाव्यतन्त्रनिगमालङ्कारवेदाञ्चल-
ज्योतिस्तन्त्रमुखेष्वनन्यसुलभप्रज्ञोल्लसत्पण्डितैः ।
तत्तच्छात्रगणानुदारधिषणानध्याप्य सन्तोषत-
स्तत्तेषां वरवेदुषीं च कलयंच्छ्रीकृष्णराजोऽवति ॥१२६॥

## प्रधानोपाध्यायानां भूरिभृतिवितरणम्

स्वपूर्वजस्थापितसंस्कृताख्य-
महाकलावेश्मनि कृष्णभूपः ।
इहत्यवैदेशिकविद्वदिन्द्रान्
प्रभूतकर्मण्यद एव पाति ॥१२८॥

## वेदशास्त्रपोषणसमितिः

इह वेदशास्त्रपोषणपरिषत् काचिन्मनोरमा निहिता ।
शास्त्राम्नायादीनामितोऽप्यमन्दां समुन्नतिं कर्तुम् ॥१२८॥

## श्रीगजाननसभोपन्यासः

प्रत्यब्दं भाद्रमासे गजवदनमहे पण्डितैरन्यदेश्यै-
रत्रस्थैस्साधुभिश्च प्रतिपदममृतस्त्राविणो भावगर्भान् ।
शास्त्रो (धर्म्यो) पन्याससंघान् प्रतिदिनमवनीपालकः कारयित्वा
नॄणां हृद्गन्ध्रसंस्थामितविविधतमो हन्त दूरीकरोति ॥१२९॥

## तत्कलाशालीयविषयव्यवस्थापकसमितिः

छात्रभृतिनव्यबोधकनियमनपाठ्यप्रबन्धपरिवृत्तीः ।
विषयावापोद्वापादिकं च कर्तुं सभात्र निरमायि ॥१३०॥

## महाराज्ञीयोषित्कलाशाला

वधूनां निर्मातुं रुचिरतमविद्याकुशलतां
महाराज्ञी प्राज्ञी व्यतनुत विशालां दृढतराम् ।
कलाशालां तस्यां प्रतिसममनेकास्सुदतयः
परीक्षासु प्रौढास्वपि दधति काष्ठां परतराम् ॥१३१॥

## वनितावैदुष्यम्

इहत्या वामाक्ष्यः पठनलिखितग्रन्थरचनै-
र्विदेशप्रस्थानैर्बहुविधपरीक्षावितरणैः ।
चिकित्साकौशल्यादिभिरपि हि पुंसामपि समाः
स्त्रियाः पुंवद्भावं तत उदितवान् पाणिनिमुनिः ॥१३२॥

Funding: IKS/Tattva Heritage. Digitization: Sarayu Trust/eGangotri

## राजगृहे सङ्गीतविद्याशाला

आनद्धैस्सुषिरैर्घनैरथ ततैरङ्कैरथालिङ्गकै-
र्वाद्यैरूर्ध्वकसंज्ञकैर्नवनवैरन्यैस्तथोपस्कृताम् ।
गीतिं कर्णसुखावहां कलयितुं गानज्ञमौलिः प्रभु-
श्चक्रे गानविदग्रिमैस्सुरुचिरां शालां स्वकीये गृहे ॥१३३॥

## नाट्यशाला

कान्तामित्रनिभप्रबन्धजकथाश्शृङ्गारवीरादिम-
स्मेरा भक्तिसुनीतितुन्दिलतमा नाट्यैर्मनःकर्षकैः ।
साक्षाद्दर्शयतेव नर्तकनटीजालेन हेमप्रभ-
श्लक्ष्णानर्घतिरःपटैश्च रुचिरा सा नाट्यशालेक्ष्यते ॥१३४॥

## राजसुतानां विद्यानिकेतनम्

मतेस्सौक्ष्म्यं नीतौ स्वकुलजनितानामपि नृपा-
त्मजानां निर्मातुं व्यरचि रुचिरः पाठनिलयः ।
अरुन्धत्यादीनां चरितमुपदेष्टुं शुचितरं
शुभं शुद्धान्तस्थोत्तमनृपवधूनामपि तथा ॥१३५॥

## शिल्पकलाशाला

हूणानामिव बहुशिल्पदाक्ष्यमासां
स्वीयानां कलयितुमादरात् प्रजानाम् ।
शिल्पज्ञप्रवरयुता तदीयविद्या-
शालेयं नरपतिना न्यधायि हृद्या ॥१३६॥

## शिशुविहारशाला

बालानां चपलधियां यथावबोधः
स्याद्बुद्धेश्श्रमलवमन्तरेण कर्तुम् ।
नाम्नेयं शिशुविहृतिस्तथात्र पुर्यां
शालेन्धेऽधिकृतमहार्दतश्च गोप्त्री ॥१३७॥

## शिशुरक्षणशाला

द्विरन्वहमनम्बुकं प्रणयमेदुरं निर्मलं
पयो वितरितुं स्तनन्धयततेश्चिकित्सां सतीम् ।
विधातुमथ गर्भिणीगणपरीक्षणं चातुलं
व्यधायि शिशुरक्षणौपयिकमन्दिरं सुन्दरम् ॥१३८॥

## अनाथविद्यानिलयः

अपोषकविमातृकाजनकदुर्गतानां कला-
निकेतनमिदं पुरे विलसतीह तान् रक्षितुम् ।
अवेतनकलादृढाभ्यसनचेलभक्तादिभि-
र्नियोजयितुमुत्तमेऽध्वनि च राजकीयादृतम् ॥१३९॥

## मूकान्धपाठगृहम्

स्वजीविकापादकहृद्यविद्या-
दनिष्ठमूकान्धततेर्महीशः ।
वैदुष्यमापादयितुं विचित्रो-
पायैः कलामन्दिरमातनिष्ठ ॥१४०॥

## पञ्चमानां विद्यागारम्

सुरापानक्रव्यादनमुखकुकर्मापनयात्
सुबुद्धिं सन्धातुं निरवधिकभक्तिं द्विजगणे ।
नृपे प्रीतिं विद्याभवकुशलतां च प्रकलितं
प्लवानामज्ञानां किमपि वरविद्यागृहमहो ॥१४१॥

## गूढवेषेण राज्ञः प्रजाशयावगमनम्

निजराज्यशासनगुणापगुणा-
नवगन्तुमेष नृपतिर्जनतः ।
पिहितस्ववेष इह हृष्टतरो
विषये परिभ्रमति दक्षमतिः ॥१४२॥

## पूर्वकरात्साम्प्रतमधिकीकृतकरस्य प्रशंसनम्

भूवेद (४१) प्रमवर्षपूर्वजकरादद्यामितोऽभूत्करो
राज्ञो न्याय्यमिदं नहीति कुमतिर्ब्रूयात् कृतघ्नो जनः ।
कृष्णेन्द्रेण कृताननेकविनया लोकोपकारान् बहून्
साकल्याद्विमृशंस्तथा न मनुजो ब्रूते ध्रुवं सन्मतिः ॥१४३॥

## वेतनानपेक्षं बालविद्याभ्यसनं प्रजायकरश्च

देशेऽत्र बालककलाभ्यसनं विबाधं
तद्देयवेतनविनाकृतमेव भाति ।
सौख्यं च दुर्गतकलाभ्यसनादिकेषु
कर्तुं प्रजायतिकरोपि (Income tax) नृपेण कृतः १४४

## प्रजायकस्य प्रशंसनम्

एतेनोत्पत्स्यमानप्रकृतिबहुविधानन्तसौख्यान्यजानन्
निन्दत्वज्ञस्ततः किं भवति पटुनमालोचनायां कृतायाम् ।
एतज्जातं स्वबालप्रहरणसदृशं दुग्धपानाय मातुस्तस्मा-
त्कृष्णावनीन्द्रोऽपति निखिलजनान्मातृवद्वत्सलोऽयम् ॥१४५॥

## ग्रन्थोपसंहारः

प्रजारक्षेनाधानौपयिकवरकार्यौघकरणं
प्रवक्तुं साकल्यादपटुधिषणेनेह नृपतेः ।
प्रगृह्यांशान्कांश्चित्कृतिरियमुदारा विरचिता
मयैषा द्रष्टव्या कृतिभिरनसूयैस्सहृदयैः ॥१४६॥

## कविजन्मसमयस्थले

रसाभ्रवसुभू (१८०६) शके जनिरभूत्स्वभानाविषे
सिते शर (५) तिथौ शनेरहनि नक्रलग्ने मम ।
करूरपुरपूर्वतस्सविधतोऽधिलक्ष्म्यम्बिको -
दराम्बुनिधि सज्जनावसथमेलपाल्यस्थले ॥१४७॥

## कविनामेतिहासः

अन्तर्वत्नी प्रसूर्मे विततफणमहिं वीक्ष्य गेहप्रकोष्ठे
नत्वा मद्धाविसूनोरहमिति च यदा शेषनाम प्रदास्ये ।
चक्रे याच्ञां तदाहिर्द्रुतगतिरपयन् दृक्पथं नाध्यगच्छत्
तस्माच्छेषाह्वयं मे व्यततुत जननी रंहसा हृष्टचित्ता ॥१४८॥

## ग्रन्थप्रणयनकालः कविनामाङ्कनञ्च

इत्थं नन्देषुनागेन्दु (१८५९) मितशकसमे धातृवर्षेऽधिभाद्रे
शुक्ले जैत्रे दशम्यां व्यतनुत परया ग्रन्थमेनं मुदासौ ।
श्रीमच्छ्रीशैलवंशाम्बुधिशिशिररुचे राममद्रार्यसूरेः
सूनुर्गोपालविद्वद्वरगणकमणेस्सोदरश्शेषसूरिः ॥१४९॥

## महाराजाशीर्वचनम्

देवब्राह्मणगौरवल्लभमहाभक्त्युज्ज्वलां निर्मला-
चारां धर्मपरां श्रितः प्रियतमां लक्ष्मीविलासेश्वरीम् ।
इन्धां स्वानुजतत्सुतोपलसितश्शुक्लेन्दुवद्भूपतिः
श्रीकृष्णस्सुगुणालयो दृढतरारोगप्रतीकश्चिरम् ॥१५०॥

प्रजावनसमुत्सकैर्नयविदग्रिमैर्मन्त्रिभि-
र्नयेन परिपालयन् धरणिमोजसामाकरः ।
अभङ्गुरदयानिधेर्यदुपतेर्दृशा वत्सरान्
शतं यदुकुलोद्भवो जयतु कृष्णभूमीश्वरः ॥१५१॥

समेधतां कर्णाटजनपदभद्रकपारम्परी

